# शिक्षकाय मानवाधिकाराणाम् औचित्यम्

# SHIKSHKAY MANAVADHIKARANAM AUCHITYAM

Narendra Singh Shekhawat

Anusandhata, JagadguruRamanandacharyaRajasthan, Sanskrit Vishwavidhyalaya, Madau, Bhakrota, Jaipur.

सजीवो निर्जीवो वा अस्मभ्यं शिक्षां प्रददति। शिक्षाजीवनं जीवनञ्च शिक्षेति। वस्तुतस्तु शिक्षा अस्माकीनां दृष्टिकोणं विशाली करोति, अवबोधादीन् तीक्ष्णान् करोति, अस्मदीयाः प्रतिक्रियाः शुद्धीकरोति, अस्मदीयान् विचारान् भावांश्च उत्तेजयति।

मानवाधिकारः मानवीयपक्षस्य संवेदना, सहयोगः, वैचारिकसम्प्रेषणम् इत्यादिभिः सह आधारितो वर्तते। तस्य सम्बन्धस्तु सभ्यसमाजस्य विकासेन समं भवति, यत्र मानवगरिमा, न्यायनिष्पक्षता, शोषणरहिता सामाजिकन्यायः इत्यादयः अधिकाराः निहिताः भवन्ति। एवं प्रकारेण मानवाधिकारसम्प्रत्यये ते सर्वे अधिकाराः सम्मिलिताः भवन्ति ये व्यक्तौ निहितानां मूलप्रवृत्तीनां विकासे आवश्यकाः सन्ति। मानवजीवने पारस्परिकसहयोग-सद्भावना-भ्रातृत्वभाव-प्रेम-नैतिकताद्याधारेणैव मानवाधिकारसंहितायाः विस्तारोऽभवत्, तथा च रीतिनीतिन्यायसम्बद्धानां विभिन्नानां मान्यतानां जन्म अभूत्। एतासु रीतिनीतिन्यायमान्यतासु एव मानवाधिकारः जीवति। वैयक्तिकरूपेण मानवाधिकारः मानवगरिमायाः स्वतन्त्रतायाश्च अनुरूपं शारीरिक-नैतिक-सामाजिक-आध्यात्मिक-भौतिककल्याणेषु मानवस्य सर्वाङ्गीणविकासे च सहायकः भवति

भारते तु मानवाधिकारसम्बद्धप्रमाणानि संस्कृतवाङ्मये लभ्यन्ते। समस्तमपि संस्कृतवाङ्मयं वेद-अपनिषद्-स्मृति-महाभारत-अर्थशास्त्रेषु मानवाधिकाराः प्रत्यक्षरूपेण दरीदृश्यन्ते एव। यथोक्तम् ऋग्वेदे -

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।<br>
देवा भागं यथा पूर्वे संजानाना उपासते।

अन्यत्रापि -

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।<br>
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।।

तथा च संविधाने शिक्षाव्यवस्था सर्वेषां कृते भवेदिति विचिन्त्य अधिकारत्वेन कृता। भारतराष्ट्रे स्वतन्त्रतायाः पूर्वं परश्च नैके शिक्षाऽऽक्षायोगगाः, शिक्षासमितयः, शिक्षानीतयश्च संगठिताः। तत्र तेषु नैकेषु शिक्षासौकर्याणि, शिक्षाऽवराः, समता च समानत्वेन भवेयुः, तदर्थं संस्तुतयः प्रदत्ताः। भारतगणतन्त्रराज्यस्य तमसंसादाधिनियमद्वारा मानवाधिकासंरक्षणाधिनियमः १९६३ वर्षे अधिनियमितः कृतः, तथा च मानवाधिकाराणां सुष्ठुरीत्या संरक्षणाय तथा तत्सम्बद्धविषयाणां कृते मानवाधिकाराभिकरणानि संगठनानि मानवाधिकारक्षेत्रे कार्यरतानि सन्ति। इतोऽपि विभिन्नाभिः योजनाभिः आदौ सर्वकारस्तावत् शिक्षायां मानवाधिकारविषयं संयोजयितुंम् अचिन्तयत्। तदर्थं नैकेषु क्षेत्रेषु आर्थिकसहाय्यम् आचार्य अस्योपरि महत्त्वं प्रदत्तमस्ति। किञ्च मानवाधिकारशिक्षा शिक्षायाः विभिन्नस्तरेषु पाठ्यक्रमे स्थानं प्रासुं विविधरूपेण नियमः परिकल्पितः अपि च प्रशिक्षणपाठ्यक्रमस्य अभूततया एषः मानवाधिकारशिक्षाविषयज्ञः संयोजितः वर्तते। उच्चशिक्षायां मानवाधिकारशिक्षायै विशिष्टं स्थानं परिकल्पितमस्ति।

परन्तु प्रतिदिनं सर्वे वार्ता पत्रिकासु पठन्ति, वार्ताः शृण्वन्ति, दूरदर्शने पश्यन्ति च यत् सर्वकारः मानवाधिकाराणां विविधप्रकारेण हननं क्रियमाणं वर्तते। शिक्षकैः छात्राः शोषिताः भवन्ति। छात्राः शिक्षकाणामपमानं कुर्वन्ति। एतादृशः अमानवीयव्यवहारः पत्रपत्रिकासु प्रकाशिताः भवन्ति। प्रजातन्त्रात्मके देशे जनानां मूलाधिकारः निर्दिष्टाः सन्ति। तथापि सत्प्रत्यपि दैनिकजीवनस्याङ्गं पूर्णतया नैव प्रासुम्। प्रजातन्त्रशक्तेः दुरुपयोगः क्रियमाणं वर्तते। जातिधर्मलिङ्गादिविविधकारेणश्च

असमानता दृश्यते। विविधाः समस्याः समुत्पन्नाः सन्ति।

अस्मिन् परिप्रेक्ष्ये मानवाधिकारविषये कीदृशी जागृतिः शिक्षकेषु वर्तते इत्यभिधानं तु आवश्यकं भवति। अतः अद्यतनच्छात्राः देशस्य भाविनागरिकाः तथा शिक्षकाः भाविनागरिकाणां निर्मातारश्च। यदि शिक्षकेषु विविधविषयेषु जागरणं न स्यात्, मानवाधिकारविषये सम्प्रत्ययः न भवेत्, मानवाधिकाराणां संरक्षणे आसक्तिः यदि न भवेत् तर्हि कथं वा ते भाविनागरिकेषु बीजारोपणं कर्तुं समर्थाः भवेयुः। प्रवर्धितेऽस्मिन् मानवाधिकारहिंसाऽहिंसासम्बद्धपरिस्थितीनां विषये ज्ञातारः भवेयुः तर्हि मानवाधिकाराणां सन्तुलितं संरक्षणं विकासश्च सम्भवति। अपि च इतरविषयकशिक्षकाणां मानवाधिकाराभिविषये अध्ययनं न क्वतच् यथाविधिः एतावत्पर्यन्तं समधितम्। अपि च संस्कृतजगति यत्र खलु एकदा मानवाधिकाराणां परिपालनम् अत्युत्तमरूपेण क्रियते स्म।

सम्प्रति मानवाधिकारः निर्विवादरूपेण एकः महत्त्वपूर्णविषयो वर्तते। मानवाधिकारः इत्यस्मिन् शब्दे नागरिक-राजनैतिक-आर्थिक-सामाजिक-

सांस्कृतिकाधिकाराः प्रामुख्येन सम्मिलिताः सन्ति। इमे सर्वेऽप्यधिकाराः मानवगरिमया सह सम्बन्धिताः वर्तन्ते। अतस्ते सर्वे मानवाधिकारनाम्ना अभिज्ञायन्ते। एष्वधिकारेषु प्रत्येकस्य मानवस्य कृते उपभोक्तुं संरक्षितुं च अधिकारः विद्यते। मानवाधिकाराः मानवेषु गरिमायाः अन्तर्निहितयोग्यतायाश्च उद्भूताः सन्ति, तथा च मानवोऽयं मानवाधिकाराणां मूलस्वतन्त्रतानाञ्च केन्द्रीयविषयरूपेण भवति।

वस्तुतः मानवाधिकाराः प्रारम्भिकमानवीयावश्यकतासु आधारिताः वर्तन्ते। एतासु काचन आवश्यकताः शारीरिकजीवनस्य स्वास्थ्यस्य कृते महत्त्वपूर्णाः। अन्या च मानसिकजीवनस्येच्छायाः विरुद्धे किमपि कार्यं नैव कर्तुं शक्यते, न च करणीयः। मानवः सर्वदा अन्यायोचितव्यवहारेण अपमानजनकव्यवहारेण च संरक्षणीयः, तथा च व्यक्तिः मानवाधिकाराणामाशा केवलं सङ्गठितसमुदाये एव कर्तुं शक्यते। अराजकतायाः स्थितेः कोऽपि जनः मानवाधिकाराणां कल्पना अपि नैव कर्तुं शक्नोति। यतो हि तत्र काऽपि एतादृशी व्यवस्था नास्ति यत्र नागरिकाधिकाराणामुल्लङ्घनस्य विरुद्धे आवेदनं कर्तुं पारयति। एवं मानवाधिकारसंरक्षणस्य सिद्धान्तः, व्यक्तेः अवधारणा, तथा च तस्य सङ्गठितसमाजे निवासकरणेन उत्पन्नो वर्तते।

समाजे मानवस्य व्यक्तित्वविकासे मानवाधिकाराः अत्यावश्यकाः भवन्ति। अतः ते निश्चितरूपेण न केवलं संरक्षणीयाः अपि तु सर्वेभ्य मानवेभ्यः प्रदापनीयाः। सर्वराष्ट्रसर्वकारैः मानवानां क्रियाकलापानामुपरि वृद्धिकारणात् संरक्षणस्यावश्यकता उत्पन्ना वर्तते। अत एव आधुनिककाले राष्ट्रियान्ताराष्ट्रियविधिषु मानवाधिकाराः वर्णिताः, मानवेभ्यः प्रदत्ताश्च। अनेन मानवगरिमायाः कृते मानवैः अन्तराष्ट्रियसंरक्षणं प्राप्तम्। राष्ट्रियस्तरे सर्वराष्ट्राणि स्वकीयसंविधानेषु मानवाकारसम्बद्धविषयाः अधिनियमिताः घोषिताश्च। इतोऽपि राष्ट्रिय-क्षेत्रीय-अन्तराष्ट्रियस्तरेषु च नैकानि सङ्गठनानि मानवाधिकारक्षेत्रे कार्यरतानि सन्ति। अन्ताराष्ट्रियसंरचनायां मानवाधिकाराणां महत्त्वं व्यापकरूपेण स्वीकृतमस्ति। अत एव मानवहितप्रापकः मानवाधिकारः मौलिकाधिकारः, मूलाधिकारः, आधारभूताधिकारः, अन्तर्निहिताधिकारः, प्राकृतिकाधिकारः तथा जन्मसिद्धोऽधिकारः इति विविधनाम्ना अपि विश्वसमाजे प्रसिद्धः अस्ति।

अधुना प्रश्न उदेति यत् साक्षरता, जागरुकता, विधि: प्रयाससत्वेऽपि मानवाधिकाराणां संरक्षणं, प्रचारप्रसार:, अभिज्ञानञ्च मानवेषु किमर्थं न जायते? वास्तविकी समस्या कुत्र अस्ति ? किमर्थं मानवानामुपरि ये जना: अत्याचारं कुर्वन्ति, तेभ्य: संरक्षणं दीयते। एवं यदि अधिकार:, नागरिकता, नीतिनिदेशकसिद्धान्त:, मूलकर्तव्यानि, सौकर्याणि, सूचनाऽधिकार: इति सर्वं विचार्यते तर्हि इदं स्पष्टं भवति यत् सर्वमिदं शिक्षया एव साध्यते। सर्वस्यापि चिन्तनस्य परमं स्रोत: शिक्षा एव। अत एव शिक्षाप्रक्रियां यदि मानवाधिकारविषये जागरणमानेतुम् उपाया: अनुचिन्त्येरन् तर्हि प्रतिव्यक्ति: अत्युत्तमं मानवाधिकारज्ञानं, संरक्षणं, संवर्धनं च सम्भवति। तदर्थं मानवाधिकारशिक्षा। सम्प्रति विश्वस्तरे जाति-लिङ्ग-धर्म-वर्ण-स्थानादीन् आश्रित्य जायमानात्याचारान् स्थगयितुम् अनाचाराणां विषये जागरुकतां च आनेतुं मानवादिकारशिक्षाया: महती आवश्यकता वरीवर्ति।

मानवाधिकारशिक्षाया: तात्पर्यं मानवाधिकाराणां विषये ज्ञान-अधिगम-जागर्या-कौशलेत्यादीनां विकासेन वर्तते, तथा च मानवाधिकारशिक्षाया: मूलमन्त्र: मानवीयगौरवस्य सम्माननं, मानवाधिकारोल्लंघनस्यावरोधनं, मानवाधिकारं प्रति जागृत्युत्पादनमस्ति। अर्थात् शिक्षामानवाधिकारयो: मध्ये अन्योन्याश्रित: सम्बन्धो विद्यते।मानवाधिकारशिक्षया मानवेषु

एकात्मकतायाः बोधः जायते। इयं शिक्षा मानवाधिकारान् प्रति सम्मानभावस्य संरक्षणभावस्य च दायित्त्वमअधिकाराणाञ्च विषये संवेदनशीलतायाः भवं पोषयति, तथा च समानावसरः, न्यायः आत्मनिर्णयः इत्येतां संरक्षणं करोति। मानवाधिकारशिक्षा एका एतादृशी कार्यसंस्कृतिः वर्तते, या जीवनकौशलनेन सह वैचारिकतां विकासयितुं, गरिमायाः समादरः संवर्द्धनञ्च कारयितुं शक्नोति।

सन्दर्भग्रन्थसूची

१. अन्वेषण एवं मानवाधिकार, बावेल, बी.एल.जयपुर हिन्दी ग्रन्थ अकादमी, २००४
२. मानवाधिकार और संयुक्त राष्ट्रसंघ, चतुर्वेदी, एस. जयपुर पाँइन्टर पब्लिशर्स, २००८
३. मानवाधिकार, देव, अर्जुन एवं मदव श्रीमती सप्ता नई दिल्ली एनसीईआरटी, २००७
४. सूचना का अधिकार, रौनी, आर.डीय एवं मेगलानी, रूपा, पंचकूला साहित्य अकादमी, २003
५. मानव अधिकार, कपूर, एस.के. इलाहबाद सेन्ट्रल लाँ एजेन्सी, २००१
६. मानव अधिकार एवं भारतीय न्यायपालिका की भूमिका, जैन, ए.आर., समुन प्रकाशन, उदयपूर, १९८३
७. स्वतन्त्र्योत्तर भारत में मानवाधिकार, माथुर, डॉ. कृष्णमोहन, वाराणसी, २०००